# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी




४५ वर्षे

३-४ अङ्कौ

वार्षिकं मूल्यम्—३० रूप्यकाणि

दिसम्बर-मार्च, १९९०-९१ ई०



प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः —
विजय-प्रेस,
सप्तसागर, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# विषयानुक्रमणी





# द्विजातिकन्योपनयनविचारः

श्रीशिवराज-आचार्यः कौण्डिन्न्यायनः,

स्वाध्यायशाला,

सरस्वतीमार्गः, लाजिम्पाट्

काठमण्डपनगरम् ( नेपालदेशः )

❀ ❀ ❀

अद्यत्वे स्त्रीणां शिक्षायाः स्वतन्त्रतायाश्च विषये हिन्दुधर्मशास्त्रीयव्यवस्था दोषपूर्णेति जना वदन्ति। एतत्प्रसङ्गे द्विजातिकन्याया वेदाध्ययनार्थक उपसदने शास्त्रीयोऽधिकारोऽस्ति न वेति विषये गम्भीरो विचार आवश्यको जातोऽस्ति।

हिन्दुधर्ममूलग्रन्थो वेदः। अतो वेदो द्विजातिकन्यायै वेदाध्ययनार्थकोपसदनेऽधिकारं ददाति न वेति मुख्यतया निरूपणीयम्।

"साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्सम्प्रादुः, उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च"[1] इति यास्कवचनाच्च धर्मज्ञानस्य मुख्यं साधनं वेदः, वेदार्थज्ञानसाधनं च वेदाङ्गानीत्यवगम्यते।

जैमिनीया धर्ममीमांसकाश्च नित्याद् वेदाध्ययनविधेर्नियमपूर्वकं वेदाध्ययनं कृत्वा वेदाद् धर्मज्ञानं विधाय धर्मफलप्राप्तये धर्मः कर्तव्य इति सिद्धान्तं स्थिरं कुर्वन्ति।

यागादिरूपधर्मानुष्ठानाशक्तोऽपि तत्प्रतिपादकवेदं सम्यगधीत्य यागादिधर्मफलं प्राप्नोतीति वदन्ति वेदवाक्यानि पाणिनीयव्याकरणभाष्यकारेण मुनिना पतञ्जलिना पस्पशाह्निके प्रदर्शितानि सन्ति। याज्ञवल्क्यस्मृतावप्ययं विषयः प्रतिपादितोऽस्ति[2]। एतस्माच्च धर्मज्ञानाय वेदाध्ययनमतीवावश्यकमित्यवगम्यते।

तस्माद् धर्मज्ञानायोपसदनपूर्वके वेदाध्ययने द्विजातिकन्याया अधिकारोऽस्ति न वेत्यत्र तीव्रा जिज्ञासोत्पद्यते।

---

१. निरुक्ते १।६।४ ; २. या० स्मृ० १।४७।

एतां जिज्ञासां शान्तां कर्तुं स्वशाखावेदमन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्रादीनां परिशीलनं प्रथमतः कर्तव्यम् । तत्र किञ्चित् साकाङ्क्षं वा व्याख्यासापेक्षं वा दृश्यते चेदाकाङ्क्षापूर्त्यै व्याख्यानाय चान्यत्र दृष्टिर्दातव्या । स्वशाखाग्रन्थम् परिशील्य स्वशाखाग्रन्थस्य स्वाभाविकं निराकाङ्क्षं परित्यज्य स्वशाखाग्रन्थशब्दार्थं बलात् परिवर्त्य चान्यग्रन्थार्थानुसरणं च नैव कर्तव्यम् ।

शतपथब्राह्मणे माध्यन्दिनीयके[1] उपनयनपदार्थविषायकानि वाक्यानि प्राप्यन्ते; किन्तु तत्र ब्रह्मचारिवाचकाः शब्दाः पुंलिङ्गका दृश्यन्ते । तत्र पुंस्त्वं विवक्षितं न वेति विचार्यमस्ति । कात्यायनश्रौतसूत्रे तावदुपनयनादिनिरूपणं नास्ति । द्विजपत्न्या यज्ञेऽधिकारस्तु "स्त्री चाऽविशेषात्"[2] इत्यत्र स्फुटं प्रतिपादितः । विवाहादिसंस्कार-विधायके माध्यन्दिनीयानां पारस्करगृह्यसूत्रे तु "अष्टवर्षं ब्राह्मणमुपनयेद् गर्भाष्टमे वैकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम्"[3] इत्युपनयनविधिवाक्यं वर्तते । अत्राप्युपनेय-वाची ब्राह्मणादिशब्दः पुंलिङ्गको वर्तते । तदनुसारेण कुमारस्यैवोपनयनं न कुमार्या इति स्वीकृतेऽदृष्टोत्पादनार्थके वेदाध्ययन उपनयनस्यावश्यकत्वात्, कुमार्या उपनयन-स्याभावेन तस्यास्तादृशवेदाध्ययनाभावे वैदिकयज्ञफलेतिकर्तव्यतादिकज्ञानस्य चाभावेन स्त्रिया वैदिकयज्ञे प्रवृत्तेरसम्भवात्, "अर्थी विद्वानधिक्रियते" इति वस्तुस्थितेः, "अङ्गहीनाऽश्रोत्रिय-षण्ढ-शूद्रवर्जम्"[4] इति कात्यायनश्रौतसूत्रवचनाच्चानधीतवेदायाः स्त्रिया वैदिकयज्ञेऽनधिकारिताया आपत्तेः, "स्त्री चाऽविशेषात्"[5] इति कात्यायन-वचनस्य तदुपोद्बलकस्य "जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्"[6] इति जैमिनिवचनस्य च विरोधस्य प्रसङ्गात् सन्देहोऽत्र भवति । तत्समाधानाय च जैमिनीयधर्ममीमांसान्यायस्य प्रयोगे ग्रहाधिकरणन्यायेन ग्रहस्यैवोपनेयस्याऽपि संस्कार्यतया ( अनुपादीयमानतया ) तस्य लिङ्गवचनयोरविवक्षि-तत्वात् कुमार्या अप्युपनयनं विहितमवगम्यते । अत एव शबरस्वामी द्विजातिकन्योप-नयनं वेदकल्पवचनान्न्यायेन प्राप्तं स्मृत्या तु निषिद्धं मन्यमान आह "तस्मात् प्रतिषि-द्धस्य पत्न्या अध्ययनस्य पुनः प्रसवे न किञ्चिदस्ति प्रमाणम्"[7] इति । कुमारिल-भट्टोऽपि टुप्टीकायामध्यापनविधिपक्षेऽरुचिं प्रदर्शयन्नाह—"अथवा स्मृतेः प्रतिषेधः[8]" इति; किन्तु वेदकल्पवचनान्न्यायेन प्राप्तस्य द्विजातिकन्योपनयनस्य निषेधकं तादृशं बलवत् स्मृतिवचनं किमिति न शबरेण न च कुमारिलभट्टेन प्रदर्शितम् । टुप्टीकाया एतस्य सन्दर्भस्य व्याख्याने तन्त्ररत्ने पार्थसारथिमिश्रश्च "पक्षान्तरमाह—अथवा स्मृतेः प्रतिषेधः । अथवेति पक्षव्यावृत्तिः । न न्यायसिद्धोऽध्ययनप्रतिषेधः; किन्तु वाचनिक

१. श० ब्रा० ११।५।४।१-१८; २. १।१।७; ३. २।२।१ ।
४. १।१।५; ५. १।१।७; ६. ६।१।८ ।
७. ६।१।२४; ८. आनन्दाश्रमसंस्करणे, पृ० ११७५ ।

एव, न्यायासम्भवात्। कथमसम्भवः ? उपनयनेऽष्टवर्षस्याध्ययनोपयोगिनो द्वितीयाप्रतिपादितसंस्कार्यत्वेनाऽविवक्षितलिङ्गसङ्ख्यत्वात् । न चाऽऽत्मनेपदश्रुत्याऽऽचार्यार्थमुपनयनम्, अकर्त्रभिप्रायार्थत्वान्नयतेरात्मनेपदविधानस्य । तेन माणवकसंस्कारद्वारेणाध्ययनाङ्गमुपनयनमनुषङ्गाद् वाजिनवदध्यापनमाचार्यकं निष्पादयतीत्येतावदात्मनेपदाद् गम्यते, न तु तादर्थ्यम् । ननु तादर्थ्येनाऽविधीयमानस्योपनयनस्य तन्निष्पादकता कथमवगम्यते ? न ह्यदृष्टसाधनता विधिमन्तरेण सिद्ध्यति । सत्यम्, न त्वाचार्यकं नामाऽदृष्टमस्ति यद् वैधं साधनमाकाङ्क्षेत्"[1] इत्याह । शास्त्रदीपिकायामपि स वदति—"यद्यप्युपनयनमष्टवर्षस्य संस्कार्यत्वेनाऽविवक्षितलिङ्गत्वात् स्त्रिया अपि भासते, अत एवाध्ययनमप्यनिर्दिष्टकर्तृकत्वात् प्रकृतमुपनीतमाश्रयत् स्त्रिया अपि स्यादित्यधिकारबुद्धिर्भवति, तथाप्याहृत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्तुम्, न च तदन्यथानुपपत्त्या तस्या अपि विद्वत्ता सम्पादयितुं शक्यते, सम्पन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेः"[2] इति, तथाप्याहृत्य स्त्रीणामध्ययनस्य प्रतिषेधकं वचनं किं कस्य कुतस्त्यमिति तु सोऽपि न स्फुटीकरोति । विश्वरूपो बालक्रीडायामाह—"लिङ्गस्य च विवक्षितत्वात् स्त्रीष्वप्रसङ्गः"[3] इति । स हि "गायत्रो वै ब्राह्मणः, अष्टाक्षरा वै गायत्री, तस्मादष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिक आम्नाये पुंलिङ्गके ब्राह्मणपदे लिङ्गं विवक्षितं मन्यते; किन्तु तदाधारस्याऽस्फुटत्वात् तद्व्याख्यानमग्राह्यं दृश्यते । एतत्सन्दर्भव्याख्याने विज्ञानेश्वरस्तु पलायनवादमाश्रयते । वासुदेवदीक्षितोऽप्यध्वरमीमांसाकुतूहलवृत्तौ—"ननु 'स्वाध्यायोऽध्येतव्यः' इत्यविशेषश्रवणात् स्त्रिया अप्यध्ययनमस्त्येव, न च 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्' इति पुंलिङ्गश्रवणादुपनयनमध्यापनं च पुंविषयमिति वाच्यम्, उपनयने ब्राह्मणस्य संस्कार्यतयाऽविवक्षितलिङ्गत्वेनोपनयनाध्ययनयोः स्त्रीपुंसविषयकत्वादिति चेत्, न, उपनयीतेत्यत्र हि 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्याचार्यकरण आत्मनेपदं विहितम्, अष्टवर्षंब्राह्मणस्योपनयनेन देवदत्त आचार्यत्वं सम्पादयेदित्यर्थः, तत्र चाऽष्टवर्षब्राह्मणस्य देवदत्तीयमाचार्यत्वं प्रत्युपादीयमानत्वाल्लिङ्गसङ्ख्यं विवक्षितमेव । एवञ्च 'तमध्यापयेत्' इत्यत्रापि तच्छब्देन प्रकृतस्यैवोपनीतस्य परामर्शान्नास्ति स्त्रीणामध्ययनम्। 'न स्त्रीशूद्रौ वेदमधीयेयाताम्' इति विशिष्य तासामध्ययनप्रतिषेधाच्च"[4] इत्याह; किन्तु शबर-कुमारिल-पार्थसारथिमिश्राद्यस्वीकृताऽध्यापनविधिं स्वीकृत्य कन्योपनयनस्य वेदकल्पवचनाद् धर्ममीमांसान्यायेनाऽप्राप्तत्वं प्रतिपादयन्ननिर्दिष्टमूलं प्राचीनतराचार्यैरनुल्लिखितं च निषेधवचनं चोपजीवन् वासुदेवदीक्षितो द्वयोर्नावोरेकैकं पादं न्यस्यन् गभीरां नदीं तर्तुमिच्छञ्जन इवोपहास्यो

१. पृ० ४३३–४३४;　　२. ६।१।६।
३. १।१४;　　४. ६।१।२६।

दृश्यते । खण्डदेवोऽपि तादृश एव दृश्यते । सोऽपि भाट्टदीपिकायामेवं ह्याह—"यद्यपि स्वाध्यायविधौ लिङ्गविशेषानुपादानेन न स्त्रियो व्यावृत्तिप्रतीतिस्तथाप्युपनयनवाक्ये तदुपादानात् तत्र च तस्योद्देश्यविशेषणत्वेऽप्यष्टवर्षत्वादिवदेव तमध्यापयीतेत्यत्र तच्छब्देन पुंस्त्वोपादानात् तद्व्यावृत्तिः । अत्र ह्यध्यापनस्य वृत्त्यर्थत्वेन रागप्राप्तत्वाल्लक्षणया प्रयोज्यव्यापाररूपाध्ययन एव कर्तृविधिः । अत एवोपनयनवाक्ये तत्संस्कारकत्वेनाचार्यकर्तृकमुपनयनं माणवककर्तृकमुपगमनमेव वा नियम्यते । तेन चाऽऽचार्यतासिद्धेरानुषङ्गिकत्वात् तामादायैवात्मनेपदोपपत्तेर्नाऽऽचार्यकरणे नयतेर्धातोरात्मनेपदं भवतीत्यनुशासनबलादुपनयनस्याऽऽचार्यार्थत्वम्, तस्य रागप्राप्तत्वेन विधिवैयर्थ्यात् । अत उपनयनविधौ लिङ्गस्याविवक्षायामप्यध्ययने तस्य विवक्षितत्वान्न स्त्रियोऽधिकारः । स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचर इति प्रतिषेधाच्च तथा"[1] इति । मीमांसकम्मन्यैः खलु सन्दिग्धो वेदकल्पविधिवाक्यार्थः सन्देहमपाकृत्य स्पष्टतया निर्धार्यः; किन्तु वासुदेवदीक्षितादिभिः कन्योपनयनं वेदकल्पविधिवाक्यान्यायेन प्राप्तं न वेति निर्धारयितुमशक्नुवद्भिर्लेखनी व्यापारिता । यदि सर्वथाऽप्राप्तमेव ते मन्यन्ते तर्हि निषेधवचनप्रदर्शनं तेषां मन्दप्रयोजनमेव । अस्मन्मते तु द्विजातिकन्योपनयनं वेदकल्पवचनान्न्यायेन प्राप्तमेव । शबर-कुमारिल-पार्थसारथिमिश्राश्चैतत्पक्षानुकूला एव ।

पुराकल्पे नारीणामुपनयनस्य वेदाध्ययनस्य च प्रदर्शकं हारीतधर्मसूत्रवचनं यमस्मृतिवचनं वा स्मृतिचन्द्रिकाकारदेवण्णभट्ट–पराशर-माधवीयकारमाधवाचार्य–निर्णयसिन्धुकार-कमलाकरभट्ट-धर्मसिन्धुकार-काशीनाथभट्ट–वीरमित्रोदयकार-मित्रमिश्र–चतुर्विंशतिमतसङ्ग्रहव्याख्याकार-भट्टोजिदीक्षित-पीयूषधाराकारगोविन्ददैवज्ञप्रभृतिभिः प्राचीनैर्बहुभिर्विद्वद्भिरुल्लिखितमिति वेदकल्पवचनानुकूलत्व एव स्मृतिवचनस्य मान्यत्वं भवतीति च हारीतधर्मसूत्रवचनं यमस्मृतिवचनं च द्विजातिकन्याया उपनयनस्य वेदाध्ययनस्य च वेदकल्पविहिततायाः प्रदर्शकमेव ।

पुराकल्पशब्दस्यार्थवादविशेषार्थकत्वं स्मृतिचन्द्रिकाकारेणाऽऽश्रितम्, युगान्तरार्थकत्वं निर्णयसिन्धुकारादिभिरुक्तम्, एतत्कल्पभिन्नगतकल्पार्थकत्वं वीरमित्रोदयकारेण प्रतिपादितम्, तथापि वयं तु द्विजातिकन्योपनयनस्योपनीतकन्यावेदाध्ययनस्य चैतत्कल्पस्थस्वशाखावेदकल्पवचनाद् धर्ममीमांसान्यायेन प्राप्तत्वात् पुराकल्पशब्दस्य पुराकालार्थकत्वं युक्तियुक्ततरं मन्यामहे । प्रयुक्तश्च पुराकल्पशब्दः पुराकालार्थकः पाणिनीयव्याकरणभाष्यकारेण मुनिना पतञ्जलिना । तथा हि "पुराकल्प एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते, अद्यत्वे न तथा" इति पस्पशाह्निके । अत्र पुराकल्पे इत्यस्य सामान्यतयाऽद्यत्व इत्यस्य विपरीतार्थकत्वमेवावगम्यते । अपरं च

१. भा० दी० ६।१।२४ ।

"अपर आह—पुराकल्प एतदासीत् षोडशमाषाः कार्षापणं षोडशफलाश्च माषशम्बट्यः, तत्र सङ्ख्यासामान्यात् सिद्धम्"[1] इति। अत्रापि पुराकल्पशब्दस्य प्राचीनकालार्थकत्वमेव। मनुस्मृतावपि[2] पुराकल्पशब्दस्यैतादृश एवार्थे प्रयोगोऽवगम्यते।

एवं द्विजातिकुमार्या उपनयनं वेदाध्ययनं च वेदकल्पवचनान्मीमांसान्यायेन प्राप्तमेवेति सामान्यतया निरूपिते कुमार्या जातकर्म-निष्क्रमणान्नप्राशन-चूडाकर्म-केशान्तसंस्काराः पारस्करगृह्यसूत्रे विहिता न वेति च विचारः प्रासङ्गिको भवति। तत्र कर्कोपाध्यायः "जातस्य कुमारस्य" इति पारस्करसूत्रांशमादाय कुमार्या जातकर्मादयो न भवन्तीति वदति, वयं तु श्रुतौ "जाते"[3] इति पदस्य प्रयुक्तत्वात् तस्य कालबोधकत्वात् सूत्रस्थस्य जातस्येति पदस्यापि कालबोधकत्वं कुमारस्येति पदस्य च कर्मसम्बन्धविशेषसूचनायैव प्रयुक्तत्वमाश्रित्य कुमारस्य कुमार्या वा जनने जातकस्य जातकर्म कुर्यादित्यर्थं युक्ततरं मन्यामहे, कर्कवाक्यस्य मनुवाक्यत्वाभावात्, युक्तिरहितानां कर्कवाक्याणां हरिहर-देवयाज्ञिक-गदाधरादिभिरप्यवधीरितत्वात्। सूत्रान्तरेषु तु कुमार्या जातकर्मादयः संस्काराः स्फुटं प्रतिपादिताः। तथा हि—आश्वलायनगृह्यसूत्रे जातकर्मान्नप्राशन-चूडा-केशान्तप्रकरणेषु "आवृतैव कुमार्यै"[4] इति सूत्राणि दृश्यन्ते, शाङ्खायनगृह्यसूत्रेऽपि चूडाकेशान्तप्रकरणयोः "तूष्णीमावृतः कन्यानाम्"[5] इति प्राप्यते, कौषीतकिगृह्यसूत्रे च चूडाकेशान्तप्रकरणयोरेव "तूष्णीमावृतः कुमारीणाम्"[6] इत्यस्ति, वाराहगृह्यसूत्रेऽपि चूडाप्रकरणे "कन्याया आहुतिवर्जम्, विदुषो ब्राह्मणार्थसिद्धिं वाचयेत, एवमुत्तरेषु"[7] इति, गोभिलगृह्यसूत्रे च चूडाप्रकरणे—"आवृतैव स्त्रियास्तूष्णीम्, मन्त्रेण तु होमः"[8] इत्युक्तं दृश्यते, जैमिनीयगृह्यसूत्रेऽपि चूडाप्रकरणे "आवृतैव स्त्रियाः कुर्यादमन्त्रं समन्त्रं चेत् पश्चाज्जुहुयात्"[9] इति, बोधायनीयगृह्यशेषसूत्रे च—"पुत्राय च दुहित्रे च समानी ब्राह्मणक्रिया। मन्त्रवद् गर्भ आजन्म जन्माद्या आवृतं स्त्रियै"[10] इति। एवं च बह्वीषु अन्यशाखासु कुमार्या जातकर्मादयः संस्कारा विहिताः, पारस्करगृह्यसूत्रे तु ते सर्वथा अविहिता इति सिद्धान्तश्चिन्त्य एव।

वयं तूत्सर्गप्राप्तानां कुमार्या जातकर्मादीनाम् अन्यसूत्रेष्वमन्त्रकत्वनियमः प्रतिपादितः, पारस्करसूत्रे तूत्सर्गप्राप्तानां कुमार्या जातकर्मादीनां समन्त्रकत्वमेवानुमतमिति पारस्करगृह्यसूत्रे जातकर्मादिप्रकरणेषु कुमारीविषयकविशेषसूत्राणामभाव इति मन्यामहे। जैमिनीयगृह्यसूत्रेऽपि मतभेदेन स्त्रियाः संस्काराः समन्त्रकाः प्रतिपादिता एव। एतेन "जातस्य कुमारस्य इति कुमारस्यानुवृत्त्या बालकानामेवोपनयनं न

१. म० भा० २।२।६४, वा. ५९; २. मनु० ९।२२७; ३. मा. वा. शतपथे, १४।९।४।२३। ४. १।१५।१२, १।१६।६, १।१७।१९, १।१८।१; ५. १।२८; ६. १।२१।२०। ७. ४।२५-२७; ८. २।९।२१-२२; ९. १।११; १०. पृ० १९६।

बालिकायाः"[१] इति हरिहरानन्दकरपात्रोक्तमपि चिन्त्यमेव वेदितव्यम्। मनुस्मृतावपि जातकर्मादयः संस्काराः स्त्रिया अपि शरीरसंस्काराय यथाकालं यथाक्रमं कर्तव्या इति स्फुटमेवोक्तम्[२]। याज्ञवल्क्यस्मृतौ,[३] विष्णुधर्मसूत्रे[४], व्यासस्मृतौ[५] च कुमार्या अपि जातकर्मादयः संस्कारा विहिता एव। एतादृश्यां स्थितौ पारस्कर-बौधायनाऽऽपस्तम्ब-भारद्वाजादिभिः कुमार्या जातकर्मादयः संस्कारा न विहिता इति कथनमयुक्तं दृश्यते। तस्मात् पारस्करादिभिः जातकर्मादिविधायकवचनैः कुमारस्य कुमार्याश्च जातकर्मादयोऽखिलाः संस्काराः समन्त्रका एव विहिता इत्येव युक्ततरमास्थातुम्। एवञ्चोपनयनमपि वेदकल्पवचनेभ्यो धर्ममीमांसान्यायेन द्विजातिकन्यानामपि प्राप्तमेवेति गम्यते।

अत्रेदमपि विचार्यम्। द्विजातिस्त्रीणां वैदिकयज्ञेऽधिकारः सर्वसम्मतः। वैदिकयज्ञाधिकारविषये च "अङ्गहीनाऽश्रोत्रिय-षण्ढ-शूद्रवर्जम्, ब्राह्मणराजन्यवैश्यानां श्रुतेः"[६] इति कात्यायनसूत्रम्, "निर्देशाद् वा त्रयाणां स्यादग्न्याधेये, ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः",[७] "अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत"[८] इति जैमिनिवचनम्। एतेषां वचनानामन्येषाञ्चैतादृशानां वचनानां मनने कृते "ब्रह्मैव वसन्तः क्षत्रं ग्रीष्मो विडेव वर्षास्तस्माद् ब्राह्मणो वसन्त आदधीत ब्रह्म हि वसन्तस्तस्मात् क्षत्रियो ग्रीष्म आदधीत क्षत्रं हि ग्रीष्मस्तस्माद् वैश्यो वर्षास्वादधीत विड्ढि वर्षाः"[९], "वसन्ते ब्राह्मणोऽग्निमादधीत····ग्रीष्मे राजन्य आदधीत····शरदि वैश्य आदधीत"[१०], "ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः"[११] इत्यादीनां श्रुतिवाक्यानामाधार एव वैदिकयज्ञे द्विजातीनामधिकारः कात्यायनादिभिः प्रतिपादितोऽवगम्यते। अपि च "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्"[१२] इत्यादिरूपेण कृतमुपनयनविधानमप्युपर्युक्तान्युपर्युक्तप्रकाराण्येव वा श्रुतिवाक्यान्युपजीव्य कृतं दृश्यते। एतस्माच्च यस्य श्रौताग्न्याधानेऽधिकारस्तस्यैवोपनयने वेदाध्ययनार्थक उपसदने चाऽधिकार इति गम्यते। रथकारस्यापि शूद्रविशेषस्याऽऽधाने नियतकर्मणि चाधिकारस्योक्तत्वादेव[१३] बौधायनगृह्यसूत्रे "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं वर्षासु रथकारमिति। सर्वानेव वा वसन्ते"[१४] इति रथकारस्योपनयनं विहितं दृश्यते। बौधायनधर्मसूत्रेऽपि निषादस्य शूद्रविशेषस्योपनयनं याजनं

---

१. चातुर्वर्ण्यसंस्कृतिविमर्शे, प्र० भा० पृ० २८९। ३. १।१३।
२. २।२९, २।३०, २।३४, २।३५, २।३६, २।६५,२।६७; ६. १।१।५-६; ७. ६।१।२६।
४. २६।१३; ५. १।१६; १०. तैत्तिरीयब्राह्मणे, १।१।२।
८. ६।१।३३; ९. मा० वा० शतपथे, २।१।३।५; १२. आपस्तम्बधर्मसूत्रे, १।१।१।१९।
११. मा० वा० शतपथे, ३।१।१।९; १४. २।५।६।
१३. कात्या. श्रौ. १।१।९–१२, जैमि० ६।१।४४–५२;

चानुमोदितमस्ति[१]। एतस्मादप्युपनयनाधिकारस्य मूलं श्रौताग्न्याधानाधिकारोऽस्तीति स्फुटतरमवगम्यते। सामान्यस्य शूद्रस्य "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः"[२] इत्यादिश्रुतिवाक्येनाऽयज्ञियताया उद्घोषितत्वात्, तदनुकूलानामन्येषां श्रुतिवाक्यानां च दर्शनादेव धर्मसूत्रकारैः सामान्याः शूद्रा अनुपनेया घोषिता इत्यवगम्यते। एतस्माच्च येषां श्रुतिवाक्यानां प्रामाण्याद् द्विजातिस्त्रीणां श्रौताग्न्याधाने श्रौतयज्ञेषु चाऽधिकारः स्वीक्रियते, तेषामेव श्रुतिवाक्यानां प्रामाण्याद् द्विजातिकन्यानामुपनयने वेदाध्ययनार्थकं उपसदने चाऽधिकारः स्वीकर्तव्य एव। एतद्विषये "यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तन्न्यायपूर्वकत्वाद् विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात्"[३] इति शङ्करभगवत्पादवचनस्य गाम्भीर्ये चाऽवधानं देयम्।

अपि च वैदिकयज्ञे द्विजातिस्त्रिया अधिकारिणीत्वमभ्युपगतं भवति; किन्तु वैदिकयज्ञाधिकारफलेतिकर्तव्यतादिबोधकस्य वेदस्याध्ययने श्रवण एव वाऽप्यधिकारिणीत्वं न भवतीति कथनं सर्वथाऽसङ्गतं दृश्यते। कात्यायनेन सामान्यतयाऽश्रोत्रियस्य द्विजातेः श्रौतयज्ञेऽनधिकारस्य प्रदर्शितत्वात्[४], जैमिनीयधर्ममीमांसासूत्रे च "न ह्यविद्वान् विहितोऽस्ति"[५] इत्युक्तत्वाच्च श्रौतयज्ञेऽधिकारस्य प्राप्त्यै द्विजातिस्त्रिया वेदाध्ययनेनाऽऽवश्यकं ज्ञानं कर्तव्यमेवेत्यवगम्यते। पत्युर्वेदाध्ययनेनैव श्रौतयज्ञः प्रचलितुं शक्नोतीति स्वीकृते ऋत्विजां वेदाध्ययनेनैव श्रौतयज्ञः प्रचलितुं शक्नोतीति स्वीकृत्य यजमानस्यापि कृते वेदाध्ययनमनावश्यकं स्वीकर्तुं शक्येत। श्रौतयज्ञानुष्ठाने पुराणश्रवणादेवोत्साहः सम्भवतीति स्वीकृते यजमानेनाऽपि वेदो नाध्येतव्यः स्यात्। शबरोऽपि "विद्यावतां चाऽऽधानाधिकारः सामर्थ्यात्"[६] इति वदत्येव। विश्वरूपोऽपि "अविदुषोऽनधिकारात्"[७] इत्याह। यया द्विजातिस्त्रिया अग्निष्टोमादिसोमसंस्थासु, वाजपेये, चयने, अश्वमेधे, पुरुषमेधे, सर्वमेधे चेति रहस्यमयेषु श्रौतयागेषु प्रवर्तितव्यम्, तेषु द्रव्यविनियोजने सहभागिन्या भवितव्यम्, तेषां फलेषूत्साहः कर्तव्यः, सा द्विजातिस्त्री वेदाध्ययनं कर्तुं नैव प्राप्नोति, वेदवाक्येभ्यस्तेषां यज्ञानां विषये ज्ञानं कर्तुं नैव प्राप्नोति, श्रुतिं श्रुतिगोचरं कर्तुं नैव प्राप्नोतीति च कथनं सर्वथाऽनुपपन्नं दृश्यते। अपरं च देवयाजियजमानपत्न्याः कृते यदि कथञ्चिद् वैदिकयज्ञानां विषये वेदाज्ज्ञानं कर्तुमनावश्यकं मन्येत, तथाप्यात्मयाजियजमानपत्न्याः कृते तु वैदिकयज्ञात्मज्ञानपक्षस्य वेदाज्ज्ञानं कर्तुमत्यावश्यकमेव मन्तव्यम्, "नाऽवेदविन्मनुते तं बृहन्तम्,"[८] "तमेव विदित्वाऽति-

१. बौ० ध० सू० १।८।१३-१४;
२. तैत्तिरीयसं० ७।१।१।६।
३. ब्रह्ममीमांसासूत्रभाष्ये—१।३।३४;
४. कात्यायनश्रौतसूत्रे—१।१।५।
५. ३।८।१८;
६. ६।८।१९;
७. याज्ञवल्क्यस्मृतौ—१।५०;
८. तैत्तिरीय-ब्रा. ३।१२।९।७।

मृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[1], "विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाऽविद्वांसस्तपस्विनः"[2] इत्यादिश्रुतिभ्यः। तस्माद् आत्मयाजि-यजमानकर्तृकश्रौतयज्ञेऽप्यधिकारिण्या द्विजातिस्त्रिया वेदाध्ययनाधिकारो वेदकल्प-वचनात् सिद्ध एव मन्तव्यः।

अपि च, यदि शूद्रस्येव द्विजातिस्त्रिया अपि वेदविद्यायामनधिकारोऽभविष्यत्, तर्ह्यपशूद्राधिकरणस्य रचयिता ब्रह्मसूत्रकारो बादरायणो मुनिः स्त्रिया वेदविद्याया-मनधिकारं प्रदर्शयितुमप्यधिकरणमरचयिष्यत्। श्रुत्या स्पष्टतया वैदिकयज्ञेऽनधिकारि-त्वेन घोषितानां शूद्राणां छान्दोग्य आगतमेकं शूद्रशब्दप्रयोगमादाय शङ्कामुत्थाप्य वेदविद्यायामनधिकारित्वं व्यवस्थापयता ब्रह्मसूत्रकारेण गार्गी-मैत्रेय्यादिद्विजातिस्त्रीणां ब्रह्मविद्यायामधिकारस्य प्रदर्शकानि तावदुपनिषत्सु समागतानि वाक्यानि विचार्य तत्र व्यवस्थाऽवश्यमेव दातव्या। परमेतद्विषये स विचारं नैवाकार्षीदिति स द्विजातिस्त्रीणां वैदिकयज्ञाधिकारिणीनां ब्रह्मविद्यायामपि वेदपूर्वकमेवाऽधिकारं निश्शङ्कतया मन्यत इत्यवगम्यते।

"गायत्र्या च्छन्दसा ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केन-चिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते"[3] इति वदता धर्मसूत्रकारेण द्विजातिस्त्रीणा-मुपनयनाभावो नैवोल्लिखित इति द्विजातिकन्यानामुपनेयत्वं धर्मसूत्रकारस्याभिमत-मेवाऽवगम्यते। "गायत्र्या च्छन्दसा ब्राह्मणमसृजत्" इति ब्राह्मणकन्यायां न प्रवर्तत इति कथनं कथमुपपद्येत ?

पुनश्च, पाणिनीयव्याकरणमहाभाष्ये "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी[4]" इत्युदाहरणस्य बहुवारमागतत्वात्, मीमांस-नीयमन्त्रब्राह्मणग्रन्थप्रकरणाध्ययनाभावे मीमांसाया वास्तविकस्याध्ययनस्याऽसम्भ-वात्, पतञ्जलिकाले ब्राह्मणीषु वेदाध्ययनपूर्वकमीमांसाध्ययनस्य परम्परा वर्तमानासी-दिति गम्यते। "इङश्चेत्यपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्"[5] इति कात्यायनवार्त्तिकात् "उपेत्याऽधीयते तस्या उपाध्यायी, उपाध्याया"[6] इति पतञ्जलि-व्याख्यानाच्च द्विजातिस्त्रीणां वेदैकदेशाध्यापकत्वं वेदाङ्गाध्यापकत्वं चाऽवगम्यमानं तासां वेदाध्ययनेऽधिकारस्य सत्त्वं समर्थयते। "आपिशलमधीते आपिशला ब्राह्मणी"[7], "औदमेध्यायाश्छात्रा औदमेधाः"[8] इत्यादयः पाणिनीयव्याकरणमहाभाष्योल्लेखाश्चैतद्-

१. माध्यन्दिनीयसं० ३१।१८;
२. मा. वा. शतपथे—१०।५।४।१६।
३. वसिष्ठधर्मसूत्रे—४।३;
४. ४।१।१४, ४।१।६३, ४।३।१४३।
५. ३।३।२१ [१];
६. ३।३।२१।
७. ४।१।१४ [३];
८. ४।१।७८ [१]।

विषये मननीया एव दृश्यन्ते। ब्रह्मवैवर्तपुराणे कृष्णजन्मखण्डे विधवाया ब्राह्मण्या धर्मे शास्त्राध्ययनाध्यापनमपि प्रतिपादितमस्तीति च[1] स्मरणीयम्।

अथ द्विजातिकन्यानामुपनयनस्य वेदाध्ययनस्य च निषेधोऽस्तीत्युक्तेः परीक्षा क्रियते। तत्र शिवदत्तशर्मा दाधिमथः सिद्धान्तकौमुदीटिप्पण्याम्[2] "आर्षग्रन्थेषु तु न क्वापि स्त्रीणामध्ययनाभाव उपलभ्यते" इति वदति, तथापि केचन कुल्लूकभट्टादि-प्रत्ययेन वक्तारो विवेकशिथिला जना मनुस्मृतेः,

"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया"॥

इति वचनं 'स्त्रीणामुपनयनसंस्कारो न भवति' इति प्रतिपादयतीति वदन्ति। तेषां कथनस्य निस्सारता मित्रमिश्रेण वीरमित्रोदयसंस्कारप्रकाशे कृतात् प्रतिपादनात् स्फुटतयाऽवगम्यते। तथा हि मित्रमिश्रः —

"मनुरपि 'प्राङ्नाभिवर्धनात् पुंसः' इत्युपक्रम्य नामकरणनिष्क्रमणान्नप्राशन-चूडोपनयनकेशान्तान् पुरुषसंस्कारान् विधायान्ते पूर्वोक्तसंस्कारेतिकर्तव्यतां स्त्रीष्वति-दिशति—

'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्'॥ इति।

अत्रेयमिति सर्वनाम्ना बुद्धिस्थपरामर्शात् सप्तानां संस्काराणां बुद्धिस्थतयोप-नयनस्यापि तदन्तर्गतत्वेनातिदेशात् स्त्रीणामप्यमन्त्रकमुपनयनं सिद्धयति। ये तु चूडान्तानामेवेदमा परामर्शो नोपनयनकेशान्तयोरिति मन्यन्ते, तेषामसम्बन्धिव्यवधानेन विच्छिन्नबुद्धीनां परामर्शं वदतां कथमिव लज्जा नाननमानमयति? अथ तूष्णी-मेताः क्रियाः स्त्रीणामिति याज्ञवल्क्यैकवाक्यतया चूडान्तानामेव परामर्शो नोपनयना-दीनामिति वाच्यम्, तर्हि यमहारीतवाक्यैकवाक्यतयोपनयनपरामर्शोऽपि कथं नाङ्गी-क्रियत इति। अथ—

'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया'॥

इत्यग्रेतनवाक्ये विवाहस्योपनयनस्थानापत्तिविधानान्यथानुपपत्त्या इदमः सङ्कोच इति न वाच्यम्, तस्य स्मृत्यन्तराभिहितोपनयनाभावपक्षे विवाहस्य तत्स्थानापत्ति-विधायकत्वेनाऽपि चरितार्थत्वात्। तस्मान्मनुवाक्ये नेदमः सङ्कोच इति।

१. ब्र० वै० पु० ८३।९४–११०;　　२. पृ. सि० कौ० १५१–१५२।

किञ्चाऽऽश्वलायनेनापि मुखमग्रे ब्राह्मणोऽनुलिम्पेतेति समावर्तनीयमनुलेपनं प्रस्तुत्योपस्थं स्त्रीत्यनेन स्त्रीणामनुलेपनं विदधता तासामप्युपनयनमुक्तं भवति, उपनयनपूर्वकत्वात् समावर्तनस्य। यत् तु सार्वत्रिकोऽयं स्त्रीणामनुलेपनविधिर्न समावर्तनीय उपनयनाभावेन समावर्तनाभावादिति व्याख्यानम्, तदसत्, उक्तरीत्योपनयनसद्भावेन 'प्राग्रजसः समावर्तनम्' इति हारीतोक्त्या च प्राग् रजसः समावर्तनसम्भवे तदङ्गत्वपरिहारेणोत्कर्षस्याऽन्याय्यत्वात्, प्रकरणे च सम्भवन्नपकर्षो न कल्प्येत, 'विध्यानर्थक्यं हि तं प्रति' इति न्यायात्। अत एव संन्यासब्रह्मजिज्ञासादिकमप्युपनीतानामेव स्त्रीणां घटते, आश्रमसमुच्चयविकल्पयोरुपनयनपूर्वकत्वात्।

तदयं निर्गलितोऽर्थः—ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत् तूष्णीं चोपनयनम्, ततो वेदाध्ययनम्, प्राग्रजोदर्शनात् समावर्तनम्, प्रागेव रजोदर्शनाद् विवाहश्चेति। सद्योवधूनां तूक्तविवाहकाल एवोपनयनम्, सद्य एव समावर्तनम्, सद्य एव विवाह इति।

पुराकल्प इति वचनान्नास्मिन् कल्प इति गम्यते। अत एव मनुः—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया॥

इत्यादिना विवाहस्योपनयनस्थानापत्तिमाह। वैदिको वेदग्रहणार्थः संस्कार उपनयनं स स्त्रीणां वैवाहिको विधिः = विवाहजन्यः संस्कारः स्मृतः पूर्वैरिति मेधातिथिपाठार्थः। मिताक्षरादिपाठस्त्वौपनायनिकः स्मृत इति। तत्रौपनायनिकः = उपनयनकार्यकारी। ततश्च यथा पुरुषस्योपनयनादिस्तथा स्त्रीणां विवाहादिर्विधिनिषेधाधिकार इत्यर्थः"[१]।

एवञ्च सति यदुक्तं हरिहरानन्दकरपात्रेण चातुर्वर्ण्यसंस्कृतिविमर्शे "पुराकल्पे कुमारीणामित्यादिरीत्यापि ब्रह्मवादिनीनां यावज्जीवं ब्रह्मचर्यमभिमतम्", "वस्तुतस्तु नियताः सूक्तद्रष्ट्र्य एव ब्रह्मवादिन्यः", "सद्योवधूव्यतिरिक्तानां ब्रह्मवादिनीनां यावज्जीवं ब्रह्मचर्यं विवाहाभावश्च", "किञ्चिदपूर्णानां स्त्रीणां पूर्णप्रकृतिकेन पुरुषेणोद्वाहः, रजोहीनाः पूर्णाश्च ब्रह्मवादिन्यो भवन्ति"[२] इत्यादि तत् सर्वं हारीतवाक्यप्रतिकूलत्वात्, मित्रमिश्रव्याख्यानप्रतिकूलत्वात्, श्रुतिस्मृतिपुराणेतिहासादिप्रयोगप्रतिकूलत्वाच्च चिन्त्यम्। हारीतवाक्यप्रतिकूलत्वस्य पूर्वोद्धृतमित्रमिश्रव्याख्यानादेव स्फुटत्वाच्छ्रुत्यादिप्रयोगप्रतिकूलत्वप्रदर्शनाय श्रुत्यादिवाक्यान्युदाह्रियन्ते—"अथ ह

१. वाराणसीसंस्करणे, पृ० ४०३।
२. चातुर्वर्ण्यसंस्कृतिविमर्शे, प्र० भा०, पृ० २८७, ३०१।

याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञेव तर्हि कात्यायनी"[1] इति बृहदारण्यकश्रुतिवाक्ये याज्ञवल्क्येनोढा मैत्रेयी ब्रह्मवादिनी दृश्यते।

"पतिव्रता महाभागा सततं ब्रह्मवादिनी।
द्रौपदी च कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत्[2] "॥

इति विराट्पर्ववाक्ये पाण्डवैरूढा द्रौपदी ब्रह्मवादिन्युक्ताऽस्ति। स्वं प्रति धर्मोपदेशं कृतवतीं पत्नीं प्रति पत्युरुक्तिः पद्मपुराणे पातालखण्डे—

"धर्ममार्गस्त्वया सर्वः पितुः प्राप्तः पुराऽनघे।
ममैतद् विदितं कान्ते भवती ब्रह्मवादिनी"[3]॥ इति।

अत्र चोढा मुनिसुता पत्या ब्रह्मवादिनीत्युक्ताऽस्ति।

स्त्रीणां वेदाध्ययनस्य प्रतिषेधकं वचनं च शबर-कुमारिल-पार्थसारथिमिश्रैः किमपि न प्रदर्शितम्। गागाभट्ट-वासुदेवदीक्षिताभ्यां तु "स्त्रीशूद्रौ वेदमधीयेयाताम्[4]" इत्यनाकरं वचनमग्रेसारितम्। खण्डदेवेन तु "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरः[5]" इति वचनं प्रस्तुतम्। कतिपय आधुनिका विचारकास्तु पराशरमाधवीयेऽप्युद्धृतं नृसिंहपूर्वतापनीयोपनिषदः "अथ सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति"[6] इति वाक्यं प्रदर्शयन्ति; किन्तु पूर्वोक्तप्रकारेण मीमांसान्यायसम्मतरूपेण वेदकल्पवचनाद् द्विजातिकन्याया उपनयनस्य वेदाध्ययनस्य च प्राप्तत्वात्, स्कन्दपुराणसूतसंहितायाम्—

"तदिदं कृपया वक्ष्ये तव सर्वजगद्धितम्।
ज्ञानमेव महाविष्णो मोक्षसाधनमुच्यते॥
ज्ञानं वेदशिरोद्भूतमिति मे निश्चिता मतिः।
अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम्॥
जायते तच्छिवज्ञानं प्रसादादेव मे हरे।
निवृत्तिधर्मनिष्ठस्तु ब्राह्मणः पङ्कजेक्षण॥
उक्तो मुख्याधिकारीति ज्ञानाभ्यासे मया हरे।
अन्ये च ब्राह्मणा विष्णो राजानश्च तथैव च॥

१. काण्वबृ० ४।५।१; २. १।३।
३. ८१।१३-१४, द्र. ९०।२८, ३२; ४. अध्वरमीमांसाकुतूहलवृत्तौ, ६।१।२६।
५. भाट्टदीपिकायाम्, ६।१।६ (पृ०४१४-४१५); ६. १।३।

वैश्याश्च तारतम्येन ज्ञानाभ्यासेऽधिकारिणः।
द्विजस्त्रीणामपि श्रौतज्ञानाभ्यासेऽधिकारिता॥

अस्ति, शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम्।
वदन्ति केचिद् विद्वांसः स्त्रीणां शूद्रसमानताम्[१]"॥

इति द्विजातिस्त्रीणां श्रौतज्ञानाभ्यासेऽधिकारस्य स्पष्टतया प्रतिपादितत्वात्, तद्व्याख्याने माधवाचार्येणाऽपि "द्विजस्त्रीणामिति। 'अथ हैनं गार्गी वाचक्नवी पप्रच्छ' इत्यादौ गार्ग्यादिविद्याव्यवहारदर्शनात्। अस्तिपदस्य पूर्वार्द्धेन सम्बन्धः" इत्युक्त्वा मतान्तरव्याख्यानेऽपि—"स्त्रीणां शूद्रसमानतामिति। यथाऽऽहुः—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
इति भारतमाख्यानं कृपया मुनिना कृतम्॥

इति गार्गीमैत्रेय्यादीनामपि श्रुतिवाक्यान्न तत्त्वावबोधः; किन्तु पौरुषेयैरेव वाक्यैर्जातस्तत्त्वावबोध आख्यायिकारूपया श्रुत्या व्यवहृत इत्येतावदिति हि ते मन्यन्त इत्यर्थः" इत्येवोक्तत्वात्, निषेधपक्षस्य विशेषपरिग्राह्यताया अनुक्तत्वात्।

"ततस्तामनवद्याङ्गीं ग्राहयामास स द्विजः।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम्[२]"॥

इति वनपर्ववचनात् स्त्रिया अप्युपनिषन्मन्त्रग्रहणस्य दृश्यमानत्वात्।

"यज्ञेषु मन्त्रवत् पत्नी कर्म कुर्याद् यथाविधि।
तथौर्ध्वदेहिके सा हि मन्त्रार्हा धर्मसंस्कृता[३]"॥

इति श्राद्धकाशिकोद्धृतस्कान्दवचनादपि स्त्रीणां वेदमन्त्रपाठेऽधिकारस्याऽवगम्यमानत्वात्, मार्कण्डेयस्मृतौ—

"भाषया रचितं शास्त्रं स्त्रीशूद्राणामचेतसाम्।
मन्त्रमात्रानधिकृतां कर्मस्वनधिकारिणाम्॥

यत् किञ्चिदर्थबोधाय कदाचित् परिकल्प्यते।
स्त्रीशब्देनात्र विदुषामाहिताग्नेश्च यज्वनाम्॥
कुलीनानां वेदिनां च न पत्न्यः स्युः कदाचन।
तासां सदा कर्ममध्ये तत्तन्मन्त्रार्थपूर्वकम्॥
बोधनस्य विधानेन वाचनेनाऽस्य शास्त्रतः[४]"॥

---

१. शिवमाहात्म्यखण्डे ७।१६–२१; २. म० भा० वनपर्वणि—३०५।२०।
३. पृ० ५०५; ४. स्मृतिसन्दर्भे षष्ठे भागे, पृ० १९–२०।

इत्युक्त्वा वेदोच्चारणनिषेधकवाक्य आगते स्त्रीशूद्रशब्दे वर्तमानः स्त्रीशब्दो द्विजपत्नीर्न बोधयतीति स्फुटमुक्तत्वाच्च गागाभट्टादिप्रदर्शितवाक्यं प्रस्तुतविचारेऽकिञ्चित्करमवगम्यते। नृसिंहपूर्वतापनीयोपनिषद्वाक्यं च न सामान्यनिषेधपरम्; किन्तु सामोपासनविशेषविषयकमिति तदपि प्रस्तुतविचारे नातीवोपयोगि दृश्यते। एवञ्च स्मृतिपुराणवाक्येषु द्विजातिकन्याया उपनयनस्य वेदाध्ययनस्य विहितप्रतिषिद्धत्वदर्शनेऽपि तयोर्विकल्पो न्यायेन स्वीकर्तुं शक्यः। द्विजकन्याया उपनयनस्य वैकल्पिकत्वमुपनयनाभावे विवाहस्यैवोपनयनकार्यकारित्वं च वीरमित्रोदयकारेण प्रतिपादितमेव। मनुस्मृतौ द्विजातिकन्याया उपनयनस्थानापन्नतायाः प्रदर्शने गुरुकुलवासगुरुसेवास्थानापन्ना पतिसेवोक्ता, अग्निपरिचर्यास्थानापन्नं गृहकार्यमुक्तम्, उपनयनमुख्यप्रयोजनभूतवेदाध्ययनस्थानापन्नं तु किमपि नोक्तमिति विवाहानन्तरं सद्योवधूरपि यथावसरं यथाशक्ति वेदाध्ययनं कुर्यादिति मनुस्मृतेराकूतमवगम्यते। गुरुकुलवासस्तु व्रतस्नातकेनापि कर्तव्य इति गुरुकुलवासो वेदाध्ययनमिति कुल्लूकभट्टव्याख्यानमश्रद्धेयम्। तस्माद् द्विजस्त्रीणां वेदाध्ययनस्याऽऽत्यन्तिको निषेध आख्यातुमशक्य एवावसीयते।

"यदा मलवद्वासाः स्यादथैतां ब्राह्मणप्रतिषिद्धानि कर्माणि संशास्ति यां मलवद्वाससमित्येतानि"[1] इत्यापस्तम्बवचनमपि यथावसरमूढद्विजस्त्रीणां वेदार्थावगमनं वेदवाक्यश्रवणपूर्वकमवगमयतीत्यपि वेदितव्यम्। न च गृहस्थताप्राप्तौ वेदग्रहणाध्ययनेऽनधिकारः शङ्कनीयः—

"वेदव्रतानि कृत्वैव विप्रो यद्युद्वहेत तत्।
अधीयीत गृहस्थोऽपि नियमाद् ब्रह्मचारिवत्"॥

इति व्यासवचनात्[2],

"अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे"॥

इति सत्यव्रतवचनात्[3], "गृहस्थस्यापि ग्रहणाध्ययनेऽधिकारसम्भवात्"[4] इति पराशरमाधवीयवचनात्, "एतच्च ग्रहणाध्ययनं गृहस्थस्यापि भवति, यदाह शौनकः 'अधीयीत समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयीत्येकेऽपत्यं प्राजापत्यं तत्। इतरे ब्रह्मचारिणः। अत एव गृहस्थस्यापि ग्रहणाध्ययनेऽधिकारं ज्ञापयितुं तत्प्रकरणेऽध्ययनविधिः"[5] इति हेमाद्रिवचनाच्च गृहस्थस्याऽपि वेदवेदाङ्गग्रहणाध्ययनेऽधिकारस्य स्पष्टतयाऽवगम्यमानत्वात्।

१. आपस्तम्बगृह्यसूत्रे, ८।१२;        २. संस्कारगणपतौ, पृ० ८८८।
३. निर्णयसिन्धौ मूलमात्रे पञ्चमसंस्करणे, पृ० २३६;   ४. प्रथमखण्डे, पृ० ५१९।
५. परिशेषखण्डे कालनिर्णये, पृ० ७३२, उपाकर्मनिर्णये पृ. ३९७।

एतादृशे च शास्त्रार्थे सति शबर-कुमारिल-शङ्करादिभिर्महद्भिर्विद्वद्भिः प्रमाद-वशाद् द्विजातिस्त्रीणामुपनयनस्य वेदाध्ययनस्य च सर्वथाऽभावः प्रतिपाद्यते, तर्हि तेषां तत् प्रतिपादनं ग्राह्यं न भवितुमर्हति। उक्तं हि चतुर्विंशतिमते—

"स्मृतिर्वेदविरोधेन परित्याज्या यथा भवेत्।
तथैव लौकिकं वाक्यं स्मृतिबाधात् परित्यजेत्[१]" ॥ इति।

एतावतैव च शबर-कुमारिल-शङ्करादीनां सर्वथाऽनाप्तत्वमपि न मन्तव्यम्, पाणिनिसूत्राणां केषाञ्चन कात्यायनेन प्रत्याख्याततत्वेऽपि, कात्यायनवार्त्तिकानां च केषाञ्चन पतञ्जलिना निराकृतत्वेऽपि च पाणिनिकात्यायनयोः सर्वथाऽनाप्तताया: पतञ्जलिनाऽनास्थितत्वस्य दर्शनात्। आप्तस्याऽपि प्रामादिकवचनस्य त्वनङ्गीकरणीयत्वं भवितुमर्हत्येव।

तस्माद् धर्ममीमांसान्यायसम्मतरूपेण वेदकल्पवचनात् स्मृतिवचनाच्च द्विजातिकन्याया उपनयनस्य वेदाध्ययनस्य च प्राप्तत्वाच्छुद्धकुलीनद्विजातिकन्याया उपनयनं वेदाध्यापनं च वेदवेदाङ्गशास्त्रविरुद्धं नास्त्येवेत्यवसीयते।

ननु द्विजातिकन्याया उपनयनं वेदाध्ययनं च धर्ममीमांसान्यायसम्मतत्वेन वेदकल्पवचनात् प्राप्तं चेत् कथं परम्परायां तदभाव इति प्रश्न इदानीं विचारणीयो भवति। तत्राऽऽश्वलायनादिवचनात्, मनुस्मृति-याज्ञवल्क्यस्मृति-व्यासस्मृत्यादिवचनात्, धर्ममीमांसान्यायसम्मतरूपेण पारस्करादिवचनाच्च प्राप्तानां द्विजातिकुमारी-जातकर्म-चूडाकर्म-केशान्तसंस्काराणां शास्त्रविहितत्वेऽपि युगभ्रंशेन व्यवहारपरम्परायां यथा लोपस्तथैव द्विजातिकुमारीणामुपनयनस्य वेदाध्ययनस्य च शास्त्रविहितत्वेऽपि युगभ्रंशेन व्यवहारपरम्परायां लोपो जात इत्येव वक्तव्यम्।

तत्र च गौतमधर्मसूत्रे "अथाष्टावात्मगुणाः। दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। यस्यैते चत्वारिंशत् संस्कारा न चाष्टावात्म-गुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति। यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति"[२] इत्युपदिष्टत्वात् कतिपयसंस्कारकर्मलोपेऽपि मूलभावनाया अलोपे प्रयोजनसिद्धेः सम्भवात्, प्रायः सर्वद्विजातिकुमारीपितृ-पितृव्य-भ्रात्रादीनां वेदाध्ययनरहितताया गायत्रीमात्रसारतायाश्च प्राप्तत्वेन द्विजातिकुमारीणां वेदाध्ययनस्याऽसम्भवाच्च द्विजातिकुमारीणां हारीतोक्त-सद्योवधूपनयनप्रकारेणैवोपनयनम्, विद्वद्ब्राह्मणद्वारा वाराहगृह्यसूत्रोक्तप्रकारेणोप-नयनकर्मसिद्धिवाचनम्, मनुस्मृत्युक्तप्रकारेण कुमार्या विवाहस्यैवोपनयनस्थानापन्न-

१. श्राद्धकाशिकायाम्, पृ० ५२८; २. गौतमधर्मसूत्रे, १।८।२४-२६।

त्वेन स्वीकरणं च व्यवहारे व्यवस्थाप्य सुदूरदर्शिभिर्वैदिकसनातनवर्णाश्रमधर्ममनीषिभिः स्वधर्मरक्षाया धर्मसूत्रकारसिद्धान्तानुकूलो मार्गोऽवलम्बितः, स एव परम्परयाऽऽगतश्चेत्यवगम्यते। एवं शास्त्रसम्मताचारप्रकारविशेषव्यवस्थापने च—

"अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः[1]" ॥

इति मनुस्मृतिवचनस्याऽप्यानुकूल्यम्। पराशरस्मृतेरेतादृशस्यैव वचनस्य व्याख्याने माधवोऽप्याह—"अत्रान्यशब्दो न धर्मस्वरूपान्यत्वमाचष्टे; किन्तु प्रकारान्यत्वम्, अन्यथा धर्मप्रमाणचोदनानामपि युगभेदेन भेदापत्तेः, न ह्ययं चोदना कृतेऽध्येतव्या, इयं त्रेतायामित्यादिव्यवस्थापकं किञ्चिदस्ति" इति, "अत्रापि युगरूपानुसारत इत्यनेन प्रकारभेद उपपद्यते, युगानां स्वरूपमनुष्ठातृपुरुषशक्तितारतम्योपेतम्, तदनुसारेणाऽनुष्ठानवैषम्यं सम्भवति यथा शक्नुयात् तथा कुर्यादिति नित्यकर्मसु निर्णीतत्वात्"[2] इत्यादि च।

एवं च धर्ममीमांसान्यायसम्मतरूपेण वेदकल्पवचनाद् द्विजातिकन्याया उपनयनस्य वेदाध्ययनस्य च प्राप्ततायाः, युगभ्रंशादशक्त्यादिना तयोरर्वाचीने काले व्यवहारे लुप्ततायाश्चावगम्यमानत्वाच्छ्रद्धायां सत्यां शक्तौ च वर्तमानायां वेदवेदाङ्गशास्त्रानुसारमनुष्ठाने दार्ढ्ये च सतीदानीं व्यवहारपरम्परायां लुप्तमपि द्विजातिकन्याया उपनयनं वेदाध्यापनं च कर्तुं युज्यत एवेत्यवसीयते, वेदविहितकर्मणां सर्वयुगसाधारणत्वात्, स्मृतिविरोधेन तेषामननुष्ठेयताया अस्वीकृतत्वात्, धर्मस्य कस्मिन्नपि युगे स्वरूपतोऽवर्जनीयत्वात्, अनुष्ठातृवैगुण्येनैव धर्मविशेषस्य युगविशेषे वर्जनीयत्वस्य शिष्टैरास्थितत्वात्। एष एवाऽभिप्रायो विश्वरूपेण बालक्रीडायां प्रकटीकृतः। तथा हि—

"नैवं न खलु शिष्टानां क्वचित् स्मृतिविरोधतः।
श्रुत्युक्तार्थाननुष्ठानं दृष्टमल्पीयसामपि ॥
न हि च्छागवधं तज्ज्ञा न कुर्वन्ति निवारितम्।
अवारितः स चेत् स्मृत्या गोवधोऽपि हि तत्समः ॥
स्मार्ता हि विषयः सर्वे श्रुत्युक्तव्यतिरेकिणः।
तेन स्मृतिविरुद्धत्वं नाऽननुष्ठानकारणम्"[3] ॥ इति।

यत् तु "तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः"[4] इति श्रुतेर्ब्रह्मणि (=वेदे) पुरुषाणामेवाधिकारो न स्त्रीणामिति श्रीहरिहरानन्दकरपात्रस्वामिकथनं[5]

१. मनु० १।८५; २. १।२२; ३. बालक्रीडायाम्, १।७।
४. अथर्ववेदसं. ३।३०।४; ५. चातुर्वर्ण्यसंस्कृतिविमर्शः, प्र. भा., पृ. २९१।

तन्न विचारसहम्, पुरुषशब्दस्य मनुष्यवाचकत्वात्, स्त्रीलिङ्गे पुरुषीशब्दस्य ऋग्वेदसंहितायाम्[1] तैत्तिरीयसंहितायाम्[2], मैत्रायणीयसंहितायाम्[3], काठकसंहितायाम्[4], कात्यायनश्रौतसूत्रे[5], बौधायनश्रौतसूत्रे[6], आश्वालयनश्रौतसूत्रे[7], भागवते[8] च प्रयुक्तत्वादेकशेषस्याश्रयितुं शक्यत्वात्। तस्माद् द्विजातिकन्याया विवाहस्यैवोपनयनस्थानापन्नत्वे स्वीकृतेऽपि तस्या विवाहात्प्रभृतिविधिनिषेधाधिकारस्याऽस्यीयमानत्वाद्[9] विवाहानन्तरं यथाशक्ति यथानुकूल्यं यथाविधि तया वेदाध्ययनं कर्तव्यम्, तदशक्तौ गायत्र्या अध्ययनं कृत्वा सन्ध्योपासनादि त्ववश्यमेव कर्तव्यमिति प्रतिभाति। एतस्य निबन्धस्य वेदवेदाङ्गविद्याभियुक्तैः शास्त्रचक्षुष्कैर्विद्वद्भिः शास्त्रवचनानुसारं समीक्षां कृत्वा एतद्विषयकः सन्देहो विपरीतबोधो वाऽपि व्युदसनीय इति शम्।



१ ऋ० सं० ७।१०२।२; २. ५।६।२१।१; ३. २।२।१३।
४. ५०।१; ५. २४।६।८; ६. १५।२८।१८।
७. १२।६।३०; ८. ५।२४।१७।
९. मिताक्षरायाम् १।१५; वीरमित्रोदये, संस्कारप्रकाशे, पृ. ४०५।